# संस्कृतामृतम्

वर्षः—सप्तदशः अंकः—नवमः

स्वीकृतम्—शिक्षा निदेशालयाभ्यां दिल्ली-चण्डीगढ़ प्रशासनयोः शिक्षालयानां पुस्तकालयानां च कृते
द्वारा (दिल्ली) पत्र सं० ५/१/८४ पा० पु० २५८१-३८८१—दिनांक ४.८.८४
एवं (चण्डीगढ़) पत्र सं० ४४६५-डी०पी०आई०-यू०टी०-ऐस-४-११(१२)/६३ दिनांक २२.३.१६६४

## विषय-क्रमः



शाकाब्द १६१६
वैक्रमाब्द २०५१ आश्विन मासस्य
सन् १६६४ सितम्बर मासस्य

प्रधान-सम्पादकः
"प्रभाकर" रामरत्न शास्त्री
साहित्याचार्य, एम. ए.
१४१८, बाज़ार गुलियान, दिल्ली-११०००६
दूरभाष : ३२६४८८६

आजीवन—शुल्कम् २५१) रूप्यकाणि वार्षिकं शुल्कम् ३०) रूप्यकाणि

# सम्पादकीयम्—

—रामरत्न शास्त्री

नायमात्मा बलहीनेन लभ्यः—(मुण्डकोपनिषद्)

प्राण शक्तिः निर्भरं जीवनम् प्राणशक्तिः नाम तेजोबलान्वितता। जीवनं प्राणिनः स्याद् राष्ट्रस्य वा प्राण शक्ति बिना-शौर्येण वीर्येण बिना-निस्तेजस्वितां भजते, सर्वतः तिरस्कारं लभते नगण्यतां चाधिगच्छति। एतस्मादेव कारणाद् भारतीय शास्त्रेषु स्थाने स्थाने "शक्तिः" उपास्या निगद्यते। यथा हि—"या देवी सर्व भूतेषु शक्ति रूपेण संस्थिता नमस्तस्यै." "सह वीर्यं करवावहै" "तेजस्विनाव धीतमस्तु" "बलमस्तु तेजः" "अदीनाः स्याम शरदां शतम्" प्रभृतीनि पराक्रमोन्मुखानि प्रेरक वाक्यानि भूयशः लभ्यन्ते। सर्वाः शक्तयः प्राण शक्ति समाश्रयन्ति।

यावत् काल पर्यन्तं भारतवासिनः "प्राणशक्तेः" महत्ताम् अवाधारयन् तावत् कोऽपि वैदेशिक आक्रामकः भारतं पराजेतुं न प्राभवत्। गुप्तकालं यावद् भारतम् अपराजितं बाह्य प्रभावैः मुक्तं च एव अतिष्ठत्। बाह्य प्रभावान् वा आत्मसात् कर्तुं समर्थः अवर्तत।

तदनन्तरं भारतस्य प्राण शक्तिः शौर्यं वा मन्दं मन्दं ह्रासताम् उपागच्छत्। फलतः विदेशीया क्रान्तृभिः भारतं पराजितम् स्व वशीगतं च कृतम् तथा विदेशीयैः स्व भाषा, स्व सभ्यता स्व भूषा च भारतीयेषु आपातिताः भारतं च दुर्बलं सत् आत्म विस्मृतिं प्राप्नोत्।

विडम्बना एषा वर्तते यत् प्राप्तायामपि स्वाधीनतायां भारतवासिभिः "स्वकीयां प्राणशक्तिं" प्राप्तुं वर्धयितुं च न किमपि प्रयतितम्, स्वच्छ मूल्यवद् वस्त्राभरणादिभिः शोभितेन रुग्णेन नरेण इव अस्मद् राष्ट्रेण (भारतेन) प्राणशक्तेः अभावात् किमपि कर्तुं न पार्यते। मानसिक दासताक्रान्ताः केचन भारत मार्गदर्शकाः नेतारः अपि स्वान् क्लीबान् इव मन्यमानाः केवलं वासोवासाशनगाननर्तनादिषु इन्द्रियार्थेषु बाह्याचारेषु एव रममाणाः सन्तः भौतिकोन्नत्या एव सन्तुष्टिं लभमाना इव वर्तन्ते। न च ते मूल-प्राण शक्तिम् (आत्मशक्तिम्) अधिगन्तुं प्रयतन्ते।

भौतिक विज्ञान विकासः यद्यपि अनिवार्यः तथापि आत्म-(प्राण) शक्ति बिना स अपूर्ण एव अपर्याप्त एवास्ति। एवमेव संजाते अपि धर्मेण नृणां मनोविकासे राष्ट्रेण पूर्णता न लभ्यते। धर्म विज्ञानयोः आध्यात्मिकता भौतिकतयोः मनसः बुद्धेः च समन्वितेन विकासेन एव चरम-लक्ष्यं लब्धुं शक्यते। समष्टि बोधाय व्यष्टि बोधः अङ्गि-ज्ञानाय च अंगानां ज्ञानं परमावश्यकं विद्यते। राष्ट्रस्य विविधानि अंगानि भवन्ति तद् विषयकं ज्ञानं सम्यग् लब्धुं प्राणशक्तिः सुतरामपेक्षिताऽस्ति येन भारतं पुरातनं गौरवम् अधिगच्छेत्।

आधुनिक भारतस्य सर्वासां समस्यानां समाधानं प्राण शक्ति भूतया मूल संस्कृत्या एव भवितुं शक्यते। सर्वधर्म-सहिष्णुतां बिना न भारतं-तेजस्वितां पुनरावर्तेत। तस्मात् सर्वतः एकांगितां विहाय सर्वाङ्गीणता आत्मसात् करणीया एवास्ति। पूर्णता प्राप्त्यै अपूर्णता त्यक्तव्या एव।

तत्त्वज्ञैः—भारतर्षिभिः मुनिभिः दूरदर्शिभिः शंकराचार्य-परमहंस रामकृष्ण-विवेकानण्द-दयानन्द महात्मागान्धी प्रभृतिभिः महापुरुषैः भारत-स्वास्थ्य वर्धनाय भारतस्य पाचन शक्ति च उद्दीपयितुं सर्वाङ्गीणतायाः मार्गो दर्शितः। केवलं प्रवृत्ति-मार्ग न नितरां श्रेयस्करः तथैव केवलं निवृत्ति मार्गः अपि कल्याण प्रदः नास्ति। सर्वत्र सामञ्जस्यं स्यात् इत्येवाभीष्टम्। तदर्थं सर्वे शिक्षिताः स्युः। शिक्षा माध्यमानि भारतीयानि स्युः। शास्त्राध्ययनं, तद् विश्लेषणं, नवानुसन्धानं, नवीनाविष्करणं सर्व हिताय तदुपयोजनं, नवनिर्माण पराणां प्रोत्साहनम् अन्याय-रोग दरिद्रतानां दूरीकरणं, आत्म निरीक्षणं परमार्थ बुद्ध्या समाजेन शासनेन च करणीयमेवास्ति। येन प्राणशक्तिः (आत्मबलम्) तेजस्विता, महत्ता सुविधाश्चापि प्राप्ताः रक्षिताः वर्धिताः च भवेयुः। इति॥

# रघुनाथ शिरोमणिः

डॉ० हर्ष कुमारः
संस्कृत-हिन्दी विभागाध्यक्षः, सेण्टस्टीफ़न्स कॉलेज, दिल्ली-७
गैर्वाणीरूपान्तरकारः चन्द्र भूषण झा
प्राध्यापकः, सेण्टस्टीफ़न्स कॉलेज, दिल्ली-७

वङ्गप्रान्ते 'नवदीप' - नामकमस्ति मण्डलमेकं यन्नदिया इत्यप्युच्यते। पञ्चदश-षोडशशताब्दयोः क्षेत्रमिदं 'मिथिला'-प्रदेशश्च भारतीय दर्शनशास्त्राणाम्, नव्य-न्यायस्य च विशेषण प्रसिद्धौ केन्द्रावास्ताम्। गङ्गेशोपाध्याय - पक्षधरमिश्र- वासुदेव-सार्वभौमिक प्रभृतिभिर्विद्वद्भिरत्रैव स्वप्रातिभपरिष्कारो नव्यन्यायस्य नैकेषां सिद्धान्तानां प्रचारश्च कृतौ। तेषु दिनेषु 'नदिया'-क्षेत्रे वह्व्यः पाठशाला आसन् याः खलु 'टोल'-पदवाच्याः। कोऽपि विद्यार्थी स्वेच्छया कस्यचिदप्याचार्यस्य 'टोलस्य शिष्यत्वं लब्धुं प्राभवत्। छात्रा विद्वांसश्च भूयसा गभीरेषु शास्त्रार्थेषु निरतास्तस्थुः। तस्मान्नव्य-न्यायसदृशः शुष्कोऽपि विषयः सरसो बभूव।

तत्रैवासीदाचार्यवासुदेव सार्वभौमिकस्यापि 'टोलः'। चत्वारः शिष्या आचार्यस्य बहुमुखिप्रतिभायाः गौरवोन्नायकाः बभूवुः—कृष्णानन्दो नाम कर्मकाण्डि-मीमांसकः, चैतन्यो नाम वैष्णवाचार्यः नव्यन्यायस्य प्रख्यात आचार्यो रघुनाथशिरोमणिश्च।

रघुनाथ एकस्य निर्धनविप्रस्य गृहे जनिं लेभे। रघुनाथस्य शैशव एव तस्य पिताऽमरेष्वगण्यत। बाले रघुनाथे आचार्यः प्रतिभाया लक्षणान्यपश्यत्तस्मै स्वकीयं शिष्यत्वञ्च प्रायच्छत्। रघुनाथ आसीत् प्रत्येकमेव वार्त्तायां तर्कशीलः। वङ्गभूमेस्तस्मिन् प्रदेशे यकार-जकारयोः कृते जकार एव केवलमुच्चार्यते स्म। सकार - शकार - षकाराणामुच्चारणं सकार एवाऽऽसीत्। रघुनाथः प्रश्नं चकार यत्सत्येकस्मिन्नेव जकारे एकस्मिन्नेव सकारे च तयो र्लेखनविधयः कथमियन्तो भिन्नास्सन्ति?

रघुनाथस्याध्ययन पद्धतिरप्यासीद् विशिष्टा। आगामिदिने कक्षायां पाठ्यमानं पाठमसौ पूर्वमेव लिखित्वा तस्य तर्कदुर्बलानाम् अंशानां खण्डनं स्वकीयं मतञ्च लिखित्वा सज्जोऽतिष्ठत्। रघुनाथः आसीन्निर्धनः काणश्च। परञ्च तस्य प्रतिभाया भास्वर आलोक एतेऽभावा व्यलीयन्त। आचार्यो वासुदेवोऽपि रघुनाथस्य विशिष्टां मेधां स्वीचकार तञ्च वृद्धाऽऽचार्यस्य पक्षधरस्य 'टोलेऽध्येतुं मिथिला नगरीं प्रैषयत्।

आचार्यपक्षधरो रघुनाथस्य काणत्वमुपहसन् प्रकृतश्लोकेन तस्य स्वागतं चकार—

"आखण्डलः सहस्राक्षः विरूपाक्षस्त्रिलोचनः।
अन्ये द्विलोचनाः सर्वे को भवानेकलोचनः॥"

रघुनाथः सत्वरमेव श्लोकममुमुत्तररूपेण प्रास्तौत्—

"योऽन्धं करोत्यक्षिमन्तं यश्च बालं प्रबोधयेत्।
तमेवाध्यापकं मन्ये तदन्ये नामधारिणः॥"

एवङ्खलूपहासान् तृणाय गणयन् रघुनाथो मिथिलाया आचार्यस्य पक्षधरस्य 'टोले' उषित्वा स्वकीयां ज्ञान-पिपासां शमयितुमचेष्टत। परञ्च तस्य तर्कशीला बुद्धिरयुक्तिकं कञ्चिदपि प्रसङ्गं न स्वीचकार। तेषु दिनेष्वाऽऽचार्यः पक्षधरो 'नव्यन्यायस्य सामान्यलक्षणम्'-नामके सन्दर्भे ग्रन्थमेकं लिखन्नासीत् कक्षायाञ्च विषयं तं प्रास्तौत्। रघुनाथो यदा सयुक्तिकं तस्य सिद्धान्ते स्वकीयं वैमत्यं प्राकटयत् तदा कुपित आचार्यस्तं 'वक्षोजपान-कृत्काणः' इति ज्ञापयित्वा कक्षातो बहिः निरक्रामयत्। किञ्चद् दिनानन्तरं शास्त्रार्थ-युद्धं द्रष्टुं जनसम्मर्द एकत्रितो बभूव। शास्त्रार्थकाले पक्षधरः स्वकीयं स्खलितमन्वभवत्। परञ्च जनानां तस्य विशालसम्मर्दस्य पुरतः स स्वकीयं पराजयं स्वीकर्त्तुं नासीत्तत्परः। रघुनाथमसौ पुनः 'निर्बोधं' 'व्यलीकं' चेति ज्ञापयिता तिरश्चकार। कक्षातो निष्क्रान्ते रघुनाथे जनानां सकलः सम्मर्द उपहसन् तमन्व-

गच्छत् ।

रघुनाथः सम्प्रति निश्चयं चकार यदसौ आचार्यं पक्षधरं विवशीकरिष्यति यत् स तस्मात्स्वकीयं पराजयं स्वीकुर्यादथवाऽसौ तस्य (आचार्यस्य) प्राणान् हरिष्यति । रात्रिवेलाऽऽसीत् । निरभ्राऽऽकाशात् पृथिव्याम् पौर्णमास्याः प्रकाशः प्रासरत् । तस्मिन्नेव काले खड्गहस्तो रघुनाथः पक्षधरस्य गृहस्यैकस्मिन् भागे प्रच्छन्न आसीत् । स्वपत्न्या सह आचार्य-पक्षधरश्चन्द्रं पश्यन् निगदन्नासीत् यत्तस्य पार्श्वेऽन्योऽप्येकश्चन्द्रोऽस्त्युदितः, यः खल्वस्मादप्यधिकस्तेजोमयो वर्तते । सोऽस्ति तस्य नूतनः शिष्यो रघुनाथशिरोमणिः । श्रुत्वैतद्रघुनाथः स्वकीये निश्चये पश्चात्तापमन्वभवत् । स आचार्यस्य समक्षं प्रकटीबभूव तस्य चरणयोर्निपत्य च स्वकीयमपराधं स्वीचकार ।

आगामिदिने मिथिलाभूमेर्विदुषां छात्राणाञ्च सम्मर्दितसभायां पक्षधरः स्वकीयं पराजयं स्वीचकार । पूर्वन्तु मिथिलाया विद्वांस एव स्वकीयान् छात्रान् उपाधिं प्रदातुमधिकारवन्त आसन् । परञ्चाधुनाऽधिकारोऽयं नवद्वीपस्याऽऽचार्यो रघुनाथशिरोमणिरपि प्राप ।

नवद्वीपं प्रत्यागत्य रघुनाथः स्वकीयं स्वतन्त्रं 'टोल' प्राचालयत् । आरम्भे वित्ताभावात्किञ्चित्काठिन्यमुदपद्यत परञ्च रघुनाथस्य यशसा वर्धमानया छात्र-संख्यया च चमत्कृताः सन्तो हरिघोषप्रभृतयो धनवन्तो व्यक्तयः कर्त्तव्यबुद्धया साहाय्यमाऽऽचरन् । एवं काठिन्यमेतद् विदूरीबभूव । भारतवर्षस्य दूर-दूरान्तरवर्त्तिप्रदेशेभ्यः स्वकीयाः शङ्काः समाधातुं विद्वांसो रघुनाथशिरोमणेः समीपं समाययुः ।

रघुनाथशिरोमणेरेकादशग्रन्था अद्यापि समुपलभ्यन्ते यैर्नव्यन्यायमतिरिच्य ज्योतिषि काव्ये चापि तस्य वैशारद्यं विज्ञायते । बोचेन्स्की-इंगल्स-पॉटर प्रभृतयो नव्याः पाश्चात्यतार्किकाः (Logicians) आचार्यस्य मौलिकान् सिद्धान्तान् प्रतीकात्मतर्कशास्त्रस्य (Symbolic Logic) सिद्धान्तान् इव विकसितान् मन्यन्ते । संगणके (कम्प्यूटर) नव्यन्यायस्य सामग्र्याः प्रयोगविषये संगोष्ठ्यपि समायोजिताऽस्ति ।

नैसर्गिकप्रतिभया, दृढनिश्चयेन सततप्रयत्नेन च रघुनाथशिरोमणिः सर्वाणि काठिन्यानि विजितवान् स्वकृतिरूपेण च भारतीयदर्शनशास्त्रेभ्योऽनुपमानि रत्नानि प्रायच्छत् ॥

# जीवन !



—मधुरः शास्त्री
काली बाडी मार्ग, नई दिल्ली-१

जीवन !
किं कथनीयम्, कथय विचारम् !
शुष्का धरणी,
वंचति मेघः,
रोदिति कलिका, विहंसति भ्रमरः,
दुर्गन्धम् मधु,
विवशं नीतम्,
मानवतायाः अग्रे समरः
किं करणीयम् कथय विचारम् !
विद्या विनता,
श्रमता विफला,
धन लालसयालस मुग्धमतिः,
नर इच्छति
स्वर्ग-सुखं सकलम्,
अज्ञान विमोहित गीत गतिः,
किं वरणीयम्, कथय विचारम् !
पतितं गर्त्ते,
मदनावर्त्ते,
निस्तत्त्व कुतापित तामसिकम्,
जीवनमद्य,
सुसंस्कृतिहीनम्,
मनसानिधनम् ननु नीरसिकम्,
किं रमणीयम्, कथय विचारम् !

## वेदामृतम्

ॐ विश्वानि देव सवितर्दुरितानि परा सुव
यद् भद्रं तन्न आसुव ॥

(यजु. अ. ३०-मं. ३)

भावार्थः—साधक प्रभु से प्रार्थना करता है कि हे सच्चिदानन्द स्वरूप, विज्ञान विद्या प्रद परमेश्वर, हमारे सारे दुर्गुणों को, दुःखों को एवं दुष्प्रवृत्तियों को दूर कीजिए तथा दुःखों से रहित सभी कल्याण हमें प्रदान कीजिए।

अर्थात्—हमें शुद्ध रूप में प्रेय व श्रेय का पात्र बनाइए ॥

---

# रामायणे राज्यस्य जनकल्याणकारि स्वरूपम्

—डॉ० चन्द्रकान्त शुक्लः
अध्यक्षः, संस्कृत विभागस्य
रांची कॉलेज, रांची

आदिकवेः वाल्मीकेः आदिकाव्यं रामायणम् संस्कृतसाहित्यस्यैव नहि अपितु विश्वसाहित्यस्यैकं रत्नमस्ति। अस्मिन् काव्ये सुप्रसिद्धस्य राज्ञः रामचन्द्रस्य गाथा वर्णितास्ति। रामचन्द्रः लोकरञ्जकत्वगुणेनैव जगति प्रसिद्धः जातः, अनेकेषां लेखकानांञ्च पथप्रदर्शकोऽभवत्। तस्य राज्यमित्थं जनकल्याणकारि आसीत् यत्तत् अग्रे उदाहरणीयं जातम्। भारतस्य राष्ट्रपिता महात्मागांधिमहाभागेन रामायणे रामस्य राज्यं पठितम्, तेन विचारितञ्च यदस्माकं देशेऽपि रामराज्यस्य स्थापना स्यात्। तेषां मते रामराज्यस्यैव स्थापनया भारतवासिनः समृद्धाः, सुखिनश्च भवितुमर्हन्ति।

राज्ञः प्रमुखं कर्त्तव्यं भवति लोकरञ्जनम्। रामायणानुसारं वयं प्राप्नुमः यद्राजारामचन्द्रः पूर्णतया लोकरञ्जकः आसीत्। तस्य राज्ये प्रजा पूर्णतः सुखिनी आसीत्। जनाः सर्वे त्रिभिरपि क्लेशैः रहिताः आसन्। तस्य राज्ये सर्वे स्वकर्मणि संलग्नाः आसन्। सर्वत्र शान्तिः आसीत्। रामायणानुसारं मानवाः एव नहि अपितु मानवेतरप्राणिनः अपि सुखपूर्वकं जीवनं यापयन्ति स्म। भरतः रामचन्द्रस्य राज्यस्य सुव्यवस्थां पश्यन् प्रशंसन् च कथयति—

"अनामयश्च मर्त्यानां साग्रो मासो गतो ह्ययम्।
जीर्णानामपि सत्त्वानां मृत्युर्नायाति राघव॥
अरोगप्रसवाः नार्यो वपुष्मन्तो हि मानवाः।
हर्षश्चाभ्यधिको राजञ्जनस्य पुरवासिनः॥
काले वर्षति पर्जन्यः पातयन्नमृतं पयः।
वाताश्चापि प्रवान्त्येते स्पर्शयुक्ताः सुखाः शिवाः।
ईदृशो नश्चिरं राजा भवेदिति नरेश्वर॥
कथयन्ति पुरे राजन् पौरजानपदास्तथा।
(वा० रा० ७.४१.१७-२२)

रामायणानुसारं राज्ञा सर्वदा प्रजाकार्ये तत्परता रक्षणीया। यः नृपः इत्थं न करोति स अवश्यं नरकं याति। विषयेऽस्मिन् रामः लक्ष्मणं प्रति कथयति—

"चत्वारो दिवसाः सौम्य कार्यं पौरजनस्य च।
अकुर्वाणस्य सौमित्रे तन्मे मर्माणि कृन्तति॥
आहूयन्तां प्रकृतयः पुरोधा मन्त्रिणस्तथा।
कार्यार्थिनश्च पुरुषाः स्त्रियो वा पुरुषर्षभ॥
पौरकार्याणि यो राजा न करोति दिने दिने।
संवृते नरके घोरे पतितो नात्र संशयः॥"
(वा. रा.—७.५३.४-६)

रामायणानुसारं राज्ञः इदं कर्त्तव्यमासीत् यत्सः पश्येत् यत्तस्य राज्ये सर्वे सुखिनः सन्ति। राजा काले-काले स्व-राज्ये भ्रमणं कुर्वन् पश्यति स्म यत्सर्वे स्वकर्मणि संलग्ना सन्ति न वा। यदि कोऽपि दुराचरणे संलग्नो भवति स्म तदा तस्य कर्त्तव्यमासीत् यत्सः तं दण्डं दद्यात्।

यस्मिन् राज्ये मानवाः प्रसन्नाः, धर्मात्मानः निर्लोभा, सत्यवादिनः, स्वधनेनैव सन्तुष्टाश्च भवन्ति तदेव राज्यं लोककल्याणकारि कथ्यते। अस्यैव वर्णनं कुर्वन् रामायणे कथितमस्ति—

"तस्मिन् पुरवरे दृष्टा धर्मात्मानो बहुश्रुताः
नरास्तुष्टा धनैः स्वैः स्वैरलुब्धा सत्यवादिन.।
(वा. ना.—१.६.६

रामायणानुसारं तदेव राज्यं सुराज्यं भवति यस्य नृपः कामक्रोधादिभिरुत्पन्नैः दुर्व्यसनैः रहितं भवति। सः गुप्तचरादिना परोक्षवृत्या स्वयञ्च प्रत्यक्षवृत्या राज्यवृत्तान्तं ज्ञात्वा राज्यसञ्चालनं करोति। यस्मिन् राज्ये मन्त्रिणः, सेनापतयः, राज्याधिकारिणः, निवासिनश्च सन्तुष्टाः तिष्ठन्ति तदेव राज्यं सुराज्यं कथ्यते। रामचन्द्रस्य राज्याभिषेकावसरे नृपः दशरथः रामचन्द्रं प्रति कथयति—

"कामक्रोध समुत्थानि त्यजस्व व्यसनानि च
परोक्षया वर्तमानो वृत्या प्रत्यक्षतया तथा
अमात्यप्रभृतीः सर्वाः प्रजाश्चैवानुरञ्जय।
(वा. रा.—२.३.४३-४४

रामायणानुसारं यस्य राज्यस्य प्रजाः यं ज

(रामायणे राज्यस्य जनकल्याणकारि स्वरूपम्)

राजारूपेण द्रष्टुमर्हन्ति स एव जनः यदि राजा जायते तदा प्रजाः सन्तुष्टाः भवन्ति। नृपः दशरथः अस्यैवोद्घाटनं कुर्वन् रामं प्रति कथयति—

"अद्य प्रकृत्यः सर्वास्त्वामिच्छन्ति नराधिपम्।
अतस्त्वां युवराजानमभिषेक्ष्यामि पुत्रक॥"
(वा. रा.—२.४.१६)

राज्ञः इदं कर्त्तव्यं भवति यत्सः योग्यतानुसारं जनान् कर्मणि नियोजयेत्—

"कच्चिन्मुख्या महत्स्वेव मध्यमेषु च मध्यमाः।
जघन्याश्च जघन्येषु भृत्यास्ते तात योजिताः॥"
(वा. रा.—२.१००.१५)

यस्मिन् राज्ये कृषकाः व्यापारिणश्च प्रसन्नाः भवन्ति तदेव राज्यं कल्याणकारि राज्यं भवति। रामचन्द्रः भरतं प्रति कथयति च—

"कच्चित् ते दमिताः सर्वे कृषिगोरक्षजीविनः।
वार्तायां संश्रितस्तात लोकोऽयं सुखमेधते॥"
(वा. रा.—१.१.४७)

यस्मिन् राज्ये नृपः प्रतिदिनं पूर्वाह्णे भूषितः सन् राजमार्गे गत्वा नागरिकान् स्वात्मानं दर्शयति तदेव राज्यं सुराज्यं भवति—

"कच्चिद् दर्शयसे नित्यं मानुषाणां विभूषितम्।
उत्थायोत्थाय पूर्वाह्णे राजपुत्र महापथे॥"
(वा. रा.—२.१००.५१)

रामायणानुसारं तस्यैव राज्यस्य नागरिकाः प्रसन्नाः भवन्ति यत्र न्यायप्रदाने धनाढ्याः निर्धनाश्च समानाः भवन्ति—

"व्यसने कच्चिदाढ्यस्य दुर्बलस्य च राघव।
अर्थं विरागाः पश्यन्ति तवामात्या बहुश्रुताः॥"
(वा. रा.—२.१००.५८)

इत्थं सर्वत्र रामायणे वर्णितमस्ति यद् राज्यं कीदृशं स्यात्। यद्यपि तस्मिन् समये राजतन्त्रम् आसीत् तथापि राज्ञः शासनम् इत्थं भवति स्म यत्प्रजाः पूर्णतः प्रसन्नाः आसन्। तुलनात्मकरूपेण वयं वक्तुं समर्थाः यत् तत्समयस्य राजतन्त्रम् आधुनिकप्रजातन्त्रादपि श्रेष्ठमासीत्। रामायणसम्मतां राज्यव्यवस्थां दृष्ट्वैव गांधिमहाभागेन रामराज्यस्य कल्पना कृता॥

# चौर चतुर्दशी

—आचार्य रामस्वरूप शास्त्री. वेदालंकार
ज्योतिष केन्द्रम्, शास्त्रि मार्गः,
इन्दिरा कालोनी, रोहतक (हरियाणा)

वन्देऽहं कुकविं सकृच्छ्रद्धापाण्डित्यनाशकम् ।
यस्य स्मरणमात्रेण दूयन्ते शास्त्रपारगाः ॥१॥

पण्डिताः खण्डिताश्चेमे मिथ्या कीर्तेश्च कामुकाः ।
काव्यं यैः तस्करीकृत्य स्वनामभिः प्रकाश्यते ॥२॥

नेता भवेद् वा मतपत्रदाता,
भ्रष्टः समाजो विदुषां पुरस्तात् ।
विद्यालयस्था गुरुवर्यरुष्टा,
भ्रष्टाश्च ते ये कवयन्ति मिथ्या ॥३॥

शिष्यश्च चौरो गुरुरेष चौरः,
समागतः प्राधुणिकोऽपि चौरः ।
स्वयञ्च चौरः प्रतिवेशिचौरो,
भृशं स निन्द्यः परकाव्यचौरः ॥४॥

यशोऽधिगन्तुं धनलिप्सया वा,
कविप्रसङ्गे निजनामदीप्त्यै ।
हरन्ति काव्यं न हि संकुचन्ति,
स्वभाव एषोऽस्ति कुपण्डितानाम् ॥५॥

बिभेति यः संस्कृतभाषणेभ्यः,
स एव काव्यं कुरुते सुरम्यम् ।
विचित्रमेतत्सुधियां समक्षं,
न वेत्ति तत्तुं क्रमते समुद्रम् ॥६॥

केचिद् वदन्ति धनहीननरो हि शून्यो
ह्यन्ये भणन्ति सुतहीनजनो हि शून्यः ।
रामस्वरूप इह वक्ति विचिन्त्य शास्त्रं,
काव्यस्यचौरपथलीन"कुना"[1]पि शून्यः ॥७॥

काव्यशास्त्रार्णवे घोरे निमज्जन्ति कुपण्डिताः,
दूराद्धि परिचीयन्ते हयेषु गर्दभा यथा ॥८॥

कविता कामिनी त्याज्यो रस्या रम्यापि या परा ।
स्वकीया सेव्यतां [illegible]का लोकनिन्दा भयावहा ॥९॥

तदेव काव्यं वचनं तदेव,
पठन्ति लोका नतमस्तका यत् ।
स एव विद्वान् कविभिः प्रशस्यो,
निर्मीति काव्यं निजमेधया यः ॥१०॥

मिलन्ति नित्यं विदुषां समूहा,
ईर्ष्यन्ति केचिच्छ्रुतिबोधहीनाः ।
विपश्चितो नूतनकाव्यकारा,
निशम्य दोषान्नहि ते शपन्ति ॥११॥

काव्यं प्रसूतिः कवियोग्यतायाः,
काव्येनहीनं विजहाति लक्ष्मीः ।
ददाति मुक्ति जगति प्रतिष्ठां,
काव्यात् परं नैव च किञ्चिदस्ति ॥१२॥

मयापि नम्या भवतापि वन्द्या,
धनं च देयं समयानुसारम् ।
गायन्तु येषामिह गीतकानि,
भवन्ति ये तस्करकर्मदक्षाः ॥१३॥

चतुर्दशीमिमां नित्यं पठेद्यः शुद्धमानसः ।
लिप्यते न स चौर्येण समाजे कीर्तिमाप्नुयात् ॥१४॥

१. कुत्सितः नरः

## व्रतोत्सव-निर्देशिका

(दिनांक २१-९-९४ तः दिनांक २०-१०-९४ पर्यन्तम्)

| दिनांकः | वारः | तिथिः | व्रतोत्सवः |
|---|---|---|---|
| | | **आश्विन कृष्ण** | |
| २३-९-९४ | शुक्रवारः | तृतीया | श्री गणेश व्रतम् |
| २७-९-९४ | मंगलवारः | सप्तमी | श्री महालक्ष्मी व्रत समापनम् |
| २८-९-९४ | बुधवारः | अष्टमी | श्री कालाष्टमी व्रतम् |
| १-१०-९४ | शनिवारः | एकादशी | इन्दिरा एका० व्रतम् |
| २-१०-९४ | रविवारः | द्वादशी | प्रदोष व्रतम् |
| ५-१०-९४ | बुधवारः | अमावस्या | अमावस्या पर्व, श्राद्ध समाप्तिः |
| | | **आश्विन शुक्ल** | |
| ५-१०-९४ | बुधवारः | प्रतिपदा | नवरात्रारम्भः |
| ९-१०-९४ | रविवारः | पञ्चमी | उपाङ्ग ललिता व्रतम् |
| १०-१०-९४ | सोमवारः | षष्ठी | सरस्वती आवाहनम् |
| ११-१०-९४ | मंगलवारः | सप्तमी | सरस्वती पूजनम् |
| १२-१०-९४ | बुधवारः | अष्टमी | श्री दुर्गाष्टमी व्रतम्, श्री महा नवमी व्रतम् |
| १३-१०-९४ | बृहस्पतिवारः | नवमी | सरस्वती विसर्जनम्, नवरात्र समापनम्, विजय दशमी पर्व |
| १४-१०-९४ | शुक्रवारः | दशमी | श्री मध्वाचार्य जयन्ती |
| १५-१०-९४ | शनिवारः | एकादशी | पापांकुशा एका. व्रतम् |
| १६-१०-९४ | रविवारः | द्वादशी | प्रदोष व्रतम् |
| १७-१०-९४ | सोमवारः | त्रयोदशी | संक्रान्ति पर्व, सूर्यः तुला राशौ |
| १८-१०-९४ | मंगलवारः | चतुर्दशी | कोजागरी व्रतम् |
| १९-१०-९४ | बुधवारः | पूर्णिमा | श्री सत्यनारायण व्रतम्, शरत् पूर्णिमा, महर्षि बालमीकि जयन्ती, कार्तिक स्नान प्रारम्भः |

(शुभकार्येषु वर्ज्यं पञ्चकम्—
दिनांक १४-१०-९४ (२७ घ. १ प.) तः दिनांक—१९-१०-९४ (१७ घ. ४५ प.) पर्यन्तम्) शिवमस्तु ॥

आदर्श वचनम्—
"सुलभाः पुरुषाः राजन् सततं प्रिय वादिनः ।
अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः ॥"

## धूपम्

—डॉ० रवीन्द्र कुमार पण्डा
अध्यापकः—म. स. विश्वविद्यालय.
वड़ोदरा

अभावे ते
विभावरी विषोदरी
सम्मुखे मे नीरवनगरी
यथा रजस्वला नारी ।

अधरे मे विलपन्ति शोषाः
आत्मनि वै विचरन्ति क्लेशाः
सर्पायते शय्या त्वया विना
तव प्रीतिरसं विना
यातना हृदये मे नाना ॥

भावनां मे गिलति ते
अभाववेदना
यथा सर्पः गिलति भेकम्
ध्यायं ध्यायं तव स्निग्धरूपम्
जीवनं मे धूपम् ॥

## संस्कृत व्यवहारवाक्यानि

"लोकभाषा प्रचार समिति" सौजन्यात्

**नित्यकर्मसमये वार्त्तालापः**

घर का पाठ लिख रहा हूं ··· गृहपाठं लिखामि

नींद आ गई ··· निद्रा आगता

कल लिखूंगा ··· श्वः लेखिष्यामि

भोजन करके सो जाओ ··· भोजनं कृत्वा शयनं करोतु

जल्दी दो ··· शीघ्रं ददातु

सब लोगों को खाने के लिए बुलाओ ··· भोजनार्थं सर्वान् आह्वयतु

सब आ गए ··· सर्वे आगताः

चावल, साग, भाजी, सब्जी ··· अन्नं, व्यञ्जनं, भर्जं शाकम् च

दाल, खट्टा दही ··· द्विदलं, अम्लं दधि

अचार दो ··· अचारं च देहि

अच्छा परोस रहा हूं ··· अस्तु, परिवेषणं करोमि

क्या सब्जी में नमक ज्यादा है ? ··· किं व्यंजनं लवणाक्तम्?

मैं नहीं खाऊंगा ··· नाहं खादिष्यामि

खाओ, खाओ ··· खादतु, खादतु

बस, नहीं चाहिए ··· अलम्, अनावश्यकम्

क्या अच्छा नहीं लगता? ··· किं न रोचते ?

कुछ लो ··· किंचित् नयतु

बस, ज्यादा हो गया ··· मास्तु, अधिकं जातम्

हाथ धोकर सो जाओ ··· हस्तं प्रक्षाल्य निद्रां करोतु

**विद्यालये-वार्त्तालापः**

आज साइकिल नहीं लाए हो क्या ? ··· अद्य द्विचक्रिका नानीता ?

लाया हूं ··· आनीता

तुम कैसे आते हो ? ··· भवान् कथम् आगच्छति

मैं पैदल आता हूं ··· अहं पदव्रजेन आगच्छामि

क्या तुम्हारे पास साइकिल नहीं है ··· भवतः पार्श्वे द्विचक्रिका नास्ति किम्

हां, है ··· आम्, अस्ति

साइकिल चलाना नहीं जानता हूं ··· द्विचक्रचालनं न जानामि

छात्रस्तम्भ:

## विशाखदत्तस्य शैली

—ललित कुमार झा

छात्र : दि० वि० वि० दिल्ली-७

विशाखदत्तः स्वकीयायाः शैल्याः स्वयं निर्माता अस्ति। राजनीतिः केन प्रकारेण प्रपञ्चयितुम् समर्था भवेत् इत्येव निदर्शनम् अस्य महाकवेः शैल्याः यथार्थतः विशेषता वर्तते। अस्य शैली स्पष्टतः प्रभावशालिनी प्रवाहमयी च अस्ति। अस्य रचनायाम् शब्दानां विन्यासः परिश्रम-संयोजन मात्रं न प्रतिभाति। अस्य रचनायाम् शब्दाडम्बराणां अपि अभावः दृश्यते। अस्य शैली विषयानुकूला परिवर्त्तन शीला च अस्ति। अस्य कृतौ मुद्राराक्षसे व्यापारान्वितिः अतीव सुसंगठिता परिदृश्यते। लेखकेन अस्मिन्नेव राजनीतेः सदृशे नीरस विषये अपि सरसतायाः सम्पुटः समानीतः। अनया दृष्ट्या सः मूर्धन्यः कलाकारः अस्ति। मानवानाम् भावनानाम् विश्लेषणे सः सिद्धहस्तः अस्ति।

तस्य शैल्याः विशेषता अस्ति श्लेषाणां प्रयोगः। व्यंग्यार्थविषयं प्रकाशयितुम् अपि सः श्लेषाणां प्रयोगं करोति। वाणस्य सदृशमेव सः अपि स्वकीयान्-भावान् श्लेष-माध्यमेन एव प्रकटीकरोति।

अस्य विशेषता इयम् अपि अस्ति यत् कविना एकम् वचनम् गद्येन कथ्यते, तर्हि तदेव वचनम् सम्यक्-रूपेण तस्मात् पश्चात् पद्येन अपि कथ्यते।

पात्राणि—पात्राणां चित्रणे अपि तस्य कुशलता अति-उत्तमा प्रतिभाति। मुद्राराक्षसे सर्वेषाम् पात्राणां नामकरणम् तत्तत्कर्त्तव्यानुसारेण विद्यमानं विद्यते। एतस्मात् इदम् सूच्यते यत् सः पात्राणां सृजनं करोति। तानि पात्राणि कृत्रिमरूपेण अस्माकम् समक्षं आगच्छन्ति।

भाषा—विशाखदत्तेन शौरसेनी, महाराष्ट्री, मागधी च प्राकृत-भाषाणां प्रयोगः क्रियते। गद्य-पद्ययोः द्वयोः एव तेन कोमल-सरस-औचित्यपूर्णाणां पदावलीनाम् प्रयोगाः क्रियन्ते। भाषायां भावेषु च अनधिपत्यं कर्त्तुम् न शक्यते। परम् अत्र भाषासु भावेषु च स्वकीयम् अधिकारं कुर्वन् इव प्रतीयते।

भाषायाम् ओजोमय-गद्यस्य समावेशः विद्यते। काव्यमयः लालित्यपूर्णः प्रवाहः अस्ति। भावावेशानाम् चित्रणे सः समर्थः अस्ति अस्य गद्यपद्ययोः द्वयोः अपि अधिकारः अस्ति।

नाटकीयता—अस्य नाटकीयायाम् प्रतिभायाम् कोऽपि अभावः नैव दृश्यते।

नायिकाविदूषकश्च—संस्कृत-नाटकाणां अपरिहार्यौ अंशौ स्तः। परम अस्मिन् नाटके अनयोः पात्रयोः सर्वथैव अभावः अस्ति। कालिदास-सदृशा काव्यप्रतिभा - कल्पना, कलात्मक - वैशिष्ट्यञ्च, हर्षस्य कोमल-विकास-प्रणयचित्रणम्, शूद्रकस्य हास्यं, व्यंग्य-करुणायाः च वातावरणं, भट्टनारायणस्य सदृशं वीरत्वानां उष्णता उत्साहः च भवभूतेः सदृशां अश्रुभिः परिप्लावित-करुणाहृदयस्य वेदना, विशाखदत्ते न लभ्यन्ते, तथापि निस्संदेहं अस्ति यत् तस्य शैल्याः कथनोपकथनस्य प्रकारः तद् विषयानुरूपः अस्ति। विशाखदत्तेन कल्पनालंकारयोः प्रयोगः विचारसंयमयुक्तेन भूत्वा कृतः इति ॥

## गज़लिका

—डॉ० सिम्मी कंधारी

म. नं. ६६६/द, चौक नमक मण्डी

अमृतसर

मरिष्यते अंततः एतेन भयेन
प्रतिक्षणं मृतकवत् जीवेत् किमर्थम् ॥
दीयन्ते यानि क्षतानि दुर्ज्ञेयेन जीवनेन
कालस्य सूत्रेण तानि सीव्येत् किमर्थम् ॥
म्लानि यानि पत्राणि ऋतूणां अतिगमनेन
क्षरद्भिः अश्रुभिः तानि गिरेत् किमर्थम् ॥
पीत्वा क्षीवः भवेत् यदि हि त्वया
विक्लिष्टः भूत्वा तर्हि पिबेत् किमर्थम् ॥
जीवनं यावदस्ति जीवेत् सलक्ष्यं "सिम्मी"
अन्यथा जीवनमिदं जीवेत् किमर्थम् ॥

## वेदो नित्यमधीयतां तदुदितं कर्म स्वनुष्ठीयताम्

इतिशास्त्र वचनानुसारं सर्वैरेव मनुष्यैः नित्यं वेदानामध्ययनं कर्त्तव्यमित्यभिलक्ष्य "सार्वदेशिक आर्यप्रतिनिधि-सभा" हिन्दी भाषायां वेदानामनुवादं सुलभमकरोत् । एषां विक्रयणे नास्ति कश्चिदार्थिक-लाभः । सर्वे वेदानां स्वाध्यायं कुर्युरित्येव लाभो महान् ।

## सार्वदेशिक आर्य प्रतिनिधि-सभा द्वारा प्रकाशितम्

### वैदिक साहित्यम्

| | | |
|---|---|---|
| १. | ऋग्वेदादिभाष्य भूमिका | २८/- |
| २. | आत्मदर्शन (नवीन संस्करण) महात्मा नारायण स्वामीकृत | १०/- |
| ३. | दयानन्द-दिव्य दर्शन (चित्रावली) | २५/- |
| ४. | कर्त्तव्यदर्पण | १०/- |
| ५. | आर्य पर्व-पद्धति | १६/- |
| ६. | ऋग्वेदः (पंचभागात्मकः सम्पूर्णः) | ४२५/- |
| ७. | यजुर्वेदः | १२५/- |
| ८. | सामदेवः | ७५/- |
| ९. | अथर्ववेदः (द्विभागात्मकः) | २१५/- |
| १०. | Introduction to the Vedas | ३०/- |
| ११. | Atharva Ved (Eng. I Part) | ६५/- |
| १२. | Atharva Ved (Eng. II Part) (Acharaya Vaid Nath Shastri) | ६५/- |
| १३. | Rigved I, II Each | ४०- |
| | III | ६५/- |
| १४. | ऋग्वेद iv (इंग्लिश) | ६५/- |
| १५. | सामवेद vi (इंग्लिश) | ६५/- |

### नवीन प्रकाशनम्

| | |
|---|---|
| वीर वैरागी | ४/- |
| बालपथ प्रदीप | २-५० |
| हमारे प्रेरक | १-५० |
| Bankim, Tilak, Day Anand | २-५० |
| सत्यार्थ प्रकाश बड़ा | १५०/- |
| वैदिकसम्पत्ति | १२५/- |
| संघर्ष ही जीवन है | ३-५० |
| गौहत्या-राष्ट्र-हत्या | ६/- |
| उपनिषद् आठ | ३१/- |
| दयानन्द वचनामृत | १/- |
| अमर हुतात्मा पं० लेखराम | १/- |
| वैदिक सूक्ति-सुधा | १/- |
| योग रहस्य | १४/- |
| मृत्यु और परलोक | १६/- |
| संस्कार चन्द्रिका | १२५/- |
| संस्कार विधि | २०/- |
| वेदार्थ कल्पद्रुमः (आचार्य विशुद्धानन्द) | ६०/- |
| वैदिक युग आदिमानव (आचार्य वैद्यनाथ) | २५/- |
| महर्षि दयानन्द (विवेकानन्द) | १२/- |
| संस्कृत सत्यार्थ प्रकाश | ५०/- |

४०/- रुपये वार्षिक शुल्क भेज कर "सार्वदेशिक" साप्ताहिक के सदस्य बनें।

(चारों वेद—नौ जिल्दों में सरल हिन्दी अनुवाद सहित एक साथ लेने पर ८५०/- रुपये के स्थान पर केवल ७००/- रुपये में । अलग-अलग जिल्द लेने पर १०% कमीशन दिया जाएगा।)

**मन्त्री, सार्वदेशिक आर्य प्रतिनिधि सभा**

दयानन्द भवन, ३/५ आसफअली रोड, नई दिल्ली-२

# कालीदास विवेचनम्

—उमा दत्त: पाण्डेय:
एम०ए०, बी०एड०, साहित्यरत्न,
२७४ रेल बाजार, कानपुर

संस्कृत साहित्यस्य इतिहासे विदुषां कवीनां वा वंशस्य समयस्य स्थानादिकस्य विषये भिन्नाः-भिन्नाः मताः प्रचलिता जाताः अतएव स्पष्टम् प्राचीन संस्कृतसाहित्यस्य निर्माण कर्तृणां इतिहासे रुचिः नासीत्। ते समकालीनानां पुरातनयुगानाञ्च ऐतिहासिक घटनानां स्वसाहित्ये उचितं स्थानं नाददन्। कविकुलगुरु - कालिदासस्य विषये अपि अद्यावधि किमपि निश्चिततया कथयितुं न शक्यते। अत्र सन्देहो नास्ति यत् कालिदासस्य ग्रन्थेषु वर्तमान समृद्धेः सुव्यवस्थायाश्च प्रकाशो भवति। इदमपि स्पष्टं यत् अस्मिन् देशे सनातन धर्मः प्रभावितः आसीत्। जैन ग्रन्थैः तस्य शूरतायाः परिचयः मिलति। वर्तमानस्य गाथा सप्तशत्या प्रतीयते यत् सः बहुउदारचरित आसीत् विदुषाञ्च आदरं करोतिस्म—

संबाहन सुख रसतोषितेन दता तव लाक्षाम्।
चरणेन विक्रमादित्य चरित्रम् शिक्षितं तस्याः॥

कविकुल शिरोमणेः कालिदासस्य सप्त कृतयो मन्यन्ते त्रीणि नाटकानि-अभिज्ञानशाकुन्तलम्, मालविकाग्निमित्रम्, विक्रमोर्वशीयम्। अभिज्ञान शाकुन्तलम् सर्वश्रेष्ठम् अस्ति।

काव्येषु नाटकं रम्यं तत्र रम्या शकुन्तला।
तत्रापि चतुर्थोऽङ्कः, तत्र श्लोक चतुष्टयम्॥

रघुवंशम्, कुमारसम्भवम् च द्वे महाकाव्ये द्वे गीति बद्धे खण्ड काव्ये—ऋतुसंहारः मेघदूतश्च केचन अन्ये ग्रन्था अपि कालिदास नाम्ना सम्बद्धाः किन्तु तेषां कालिदास कर्तृत्व सन्देहः। कालिदासः पौराणिक वर्णाश्रम धर्मस्य अनुयायी आसीत्। रघुवंशे कविना स्पष्टं लिख्यते यद् वर्णाश्रम धर्मस्य पालनम् राज्ञो मुख्यं कर्तव्यमस्ति कालिदासस्य मृत्योः समय स्थानादिकानामपि विषये अनेके मताः प्रचलिता सन्ति।

कालिदासस्य संस्कृतसाहित्ये निःसंदेहं सर्वोच्चस्थानमस्ति। प्राचीनार्वाचीनैः सर्वैः भारतीय विद्वद्भिः पाश्चात्यैश्चैकमत्येन कालिदासः कविकुलगुरुरिति मन्यते। अस्य नाटकेषु सर्वाणि पात्राणि प्रत्यहं नवीनानि भवन्ति। परम मनोहरा च अस्य महाकवेः छन्दोवुद्धिरपि अत्यन्तलघ्वी आसीत् अतएव बहुशः बहूनां छन्दसां प्रयोगो दृश्यते। ऋतुसंहारे मालिनी वंशस्थेन्द्रवज्रावसन्ततिलकाच्छन्दसां प्रख्यातानां प्रयोगो मिलति, कुमारसम्भवे उपर्युक्ता सरणिरेवानुसृतावलोक्यते। रघुवंशे महाकाव्ये एकोनविंशतिछन्दांसि प्रयुक्तानि विद्यन्ते सर्वछन्दः प्रयोगे भावस्य विस्तारे नियंत्रणे च पूर्णाशक्तिः दृश्यते। शब्दार्थौ अलंकारौ कविः चित्रितवान्। कालिदासस्य शृङ्गारे सहृदया आनन्दमनुभवन्ति। ईदृशी एवास्य सर्वत्र प्रतिभा सर्वाधिकश्रेष्ठा दृश्यते किन्तु कालिदासस्य उपमा अतिश्रेष्ठा वर्तते।

अस्य कवित्वं भारतीय वाङ्मस्यालंकारोस्ति। कविकुलगुरुः कविताकामिनी वरेण्यः, सरस्वती दत्तवरः, विदुषां विलासः, महाकविः कालिदासः अद्वितीयं स्थानं संस्कृतवाङ्मये धारयति इति विख्यातम्। कीर्तिः चास्य समस्तं विश्वं व्याप्नोति तस्य यशः भूतलम् व्याप्नोति तस्य कविता प्राचीनान् सर्वान् रसिकान् आनन्दयति च। उपमासम्बन्धेऽयं विश्वविख्यातः कविः। अस्योपमा समस्त विश्व स्मिन् प्रसिद्धास्ति। यथा—

संचारिणी दीप शिखेव रात्रौ
यं यं व्यतीयाय पतिंवरा सा।
नरेन्द्रमार्गाट्ट इव प्रपेदे
विवर्णभावं स स भूमिपालः॥

अपि च—

अधरः किशलयरागः कोमलविप्पानु कारिणौ वाहु।
कुसुममिव लोभनीयं यौवनाङ्गेषु सन्नद्धम्॥

(शेषांशः १५ पृष्ठे)

## स्मृतिर्महदालम्बनम्

—डॉ कृष्णलाल:
दिल्ली विश्वविद्यालय संस्कृताचार्यः

त्वं चेद् गच्छसि, गम्यताम्,
कोऽहमवरोद्धुं त्वाम्…।
एतावज्जाने किन्तु प्रिये !
हृदयान्नैव गमिष्यसि।
त्वां स्मरिष्याम्यविरतम्,
त्वं माम् स्मरिष्यसि नूनम्।
न जाने
कदा
कस्मिन् जगतः कोणे
पुर्नमिलिष्यावः,
पुनर्गास्यावः।
अथवा स्मृतिर्हृदये तव
महदालम्वनं मे।
तया जीवितं धारयिष्यामि।
तां खलु श्रिता इमे प्राणाः।

---

(कालीदास विवेचनम्)

अतः उपर्युक्तोद्धरणैः इदं कथयितुं शक्यते यद् उपमा विषये कालिदासः विश्वविश्रुतः।

संस्कृत साहित्ये अखिलविश्वसाहित्यक्षेत्रे च कालिदासः अद्वितीय एव उक्तं च—

पुरा कवीनां गणना प्रसंगे
कनिष्ठिकाधिष्ठित कालिदासः।
अद्यापि तत्तुल्यकवेरभावा
दनामिका सार्थवती वभूव॥

इति कथनं कालिदासविषये समीचीनमेव। इति॥

## समाचाराः

### १. संगोष्ठी

६-८-९४—दिल्ली संस्कृत अकादमी (दिल्ली सर्वकार) स्थानीये "अशोक विहार" स्थिते कुलाची हंसराज माडल स्कूल" इत्यभिधे विद्यालये "संस्कृत साहित्ये वनस्पति विज्ञानम्" इति विषयमधिकृत्य संगोष्ठीं समायोजयत्।

अत्र मुख्यातिथित्वेन माननीयः श्री आलोक कुमारः (दिल्ली विधानसभाध्यक्षः) समुपस्थितान् समबोधयत् यत् विश्वस्य विशालतमे संस्कृत साहित्ये संस्कृतिधर्मयोः ज्ञानं, जीव-चिकित्सा-वनस्पतीनां विज्ञानं प्रभूतया विद्यते। पर्यावरण शुद्धतायै वृक्षैः वनस्पतिभिः च अस्माकं सम्बन्धः परमावश्यकः वृक्षाणां पुत्रीकरणं मित्रीकरणं च परमं लाभ प्रदं वर्तते।

विशिष्टातिथि रूपेण भाषमाणा माननीया डॉ. सरोजनी महिषी (पूर्व विधि मन्त्री-भारत सरकार) संस्कृत भाषां भारतीय भाषाणां जनयित्रीं पोषिकां च सर्वविध ज्ञान विज्ञान भरितां, औषध-वनस्पति विज्ञानस्यं प्रथमां विज्ञापिकां च प्रत्यपादयत्।

डॉ. मोहनचन्द्रः (प्रवक्ता रामजस कालेज) डॉ. कृष्ण लालः (दि.वि.वि.) डॉ. विजय पालः शास्त्री, डॉ. निर्मल त्रिखा, डॉ. चक्रधर प्रमुखाः विद्वांसः "संस्कृत साहित्ये वनस्पति विज्ञानस्य सत्तां महत्तां च प्रभाषितवन्तः।

अकादमी सचिवः श्री श्रीकृष्ण सेमवालः संगोष्ठी सञ्चालनमकरोत्॥

### २. परिसंवादः

१८-८-९४—दिल्ली संस्कृत अकादमी स्थानीये "हिमाचल भवन" सभागारे "वर्तमान सन्दर्भे स्मृतिषु वर्णित विवदास्पद् अंशेषु विचारः इति" विषय मधिकृत्य डॉ. कमला कान्त मिश्र महाभागस्य (निदेशक-रा संस्कृत संस्थानम्) अध्यक्षतायां "परिसंवादम्" समायोजयत्।

"परिसंवादे" मुख्यातिथि: श्री विश्वम्भर दत्त शर्मा (वरिष्ठ उपसम्पादक नवभारत टाइम्स) प्रतिपादितवान् वद् देववाणी "संस्कृतम्" एकताया: अखण्डताया: च प्रतीक भूताऽस्ति। कामपि जातिं धर्मं प्रान्तीयतां वा न खण्डयति अपि तु योजयति। स्मृतिषु उल्लिखितं तत्तद् देश कालानुरूपं सर्वमपि निर्देशजातं वर्तमानकालेऽपि समीचीनं स्यात् इति न आवश्यकं, तत्र आलोचना तत्रापि कटुआलोचना तु संकीर्णताधारिता एवास्ति। श्री शर्मा "अकादमी" कार्यक्रमान् प्राशंसत।

अत्र "भारत संस्कृत परिषद:" महामन्त्री श्री रामनाथ: "सुमन", डॉ. उर्मिल रुस्तगी (मिराण्डा कालेज) प्रो. सन्तोष कुव्वा, "संस्कृतामृतम्" प्रधान सम्पादक: प्रभाकर राम रत्न: शास्त्री, डॉ. सत्यदेव चौधरी, श्री के.पी.ए. मेनन् महोदय:, डॉ. निर्मल: त्रिखा प्रभृतिभि: विद्वद्भि: बुद्धिजीविभि: च स्मृतिषु विवादास्पद् अंशानां नारी वर्ण-संस्कार शिक्षादीनां विषये आलोचना प्रत्यालोचनापुर: सरं शंका समाधान गर्भितं सुचारुतया स्पष्टीकृतम् प्रभाषितं च।

"परिसंवाद" सञ्चलनं अकादमी सचिव: श्री श्रीकृष्ण सेमवाल: कृतवान्।

**३. संस्कृत दिवस समारोह:**

१९-८-९४—दि०सं० अकादमी स्थानीये "फिक्की सभागारे" संस्कृत दिवस समारोहं समायोजयत्। अध्यक्षतां च समारोहस्य श्री तरुण विजय महाभाग: (मुख्य सम्पादक-साप्ताहिक-पाञ्चजन्य) कृतवान्।

अत्र मुख्यातिथित्वेन माननीय: सांसद: श्री विजय कुमार मल्होत्रा महोदय: देववाणीं संस्कृतं भारतस्य आत्मानं, धर्म जाति सम्प्रदाय प्रदेशातीतं, सर्व धर्म-सम भाव प्रेरकं, विविध ज्ञान विज्ञान 'समन्वितं च भापितवान्'। स्व० डॉ० भरत सिंह लिखितं अकादमी द्वारा प्रकाशितं "महावुद्धवत्थु" महाग्रन्थस्य तथा श्री शंकराचार्यं रचितस्य अकादमी द्वारा निर्मितस्य "सौन्दर्य लहरी" श्रव्य कैसेटस्य लोकार्पणं चापि श्री मल्होत्रा महोदय: कृतवान्।

अत्रावसरे 'दि० सं० अकादमी' विविधान् संस्कृतोपक्रमान् उपलक्ष्य त्रिशदधिकान् संस्कृत-विद्वद्जनान् विभिन्नाभि: धन राशिभि: प्रशस्ति पत्रै: अकादमी-प्रतीक चिह्नै: प्रावारै: च पुरस्कृतान् सम्मानितान् च अकरोत्। पुरस्कृतेषु प्रमुखा: डॉ० हर्ष कुमार: (प्राध्यापक:-सेण्टस्टीफन कालेज), डॉ० मोहन चन्द्र: (रामजस कालेज), डॉ० कृष्ण लाल: (दि०वि०वि०) डॉ० आशा तिवारी, श्रीमती सरोज गुप्ता, डॉ० केशवचन्द्र दाश:, श्रीमती शारदा कपूर, डॉ० रमाकान्त शुक्ल:, डॉ० सत्यदेव चौधरी, स्वामी श्री श्यामानन्द शास्त्री, आचार्य: श्री हीरा लाल:, श्री धर्मवीर शास्त्री च आसन्।

जन संकुले अत्र संस्कृत दिवसावसरे दिल्ली विधायक: श्री नरेश गौड़:, मुरारिसिंह पवार: (दि. विधायक:) श्री सेवाराम शर्मा (आपूर्ति निगमाध्यक्ष:) श्री के.पी.ए. मेनन् (पूर्व रक्षा सचिव:) डॉ. कमला कान्त मिश्र: (निदेशक रा० सं० संस्थान) श्री तरुण विजय: (सभाध्यक्ष:) संस्कृत महत्त्वं वर्णयन्त: समुपस्थितान् संस्कृतं प्रति प्रेरितवन्त: अकादमी कार्यकलापान् च प्रशंसितवन्त:।

मञ्च सञ्चालनं अकादमी सचिव: श्री श्रीकृष्ण सेमवाल: कृतवान्।

**४. संस्कृत कवि सम्मेलनम्**

२०-८-९४—दि० सं० अकादमी परम श्रद्धेयानां शृङ्गेरी शंकराचार्य महाभागानाम् सम्मानोपलक्ष्ये संस्कृत कवि सम्मेलनं स्थानीये "शंकर विद्या केन्द्रे" सांसद श्री त्रिलोकीनाथ चतुर्वेदी महोदयानामध्यक्षतायां समायोजयत्।

संस्कृत कवि सम्मेलनम् उद्घाटयन् श्री चरती

लाल गोयलः (दिल्ली विधानसभाध्यक्षः) प्रतिपादितवान् यत् संस्कृत भाषा भारतस्य अस्मिता, सभ्यतायाः मूल स्रोतः ज्ञान-विज्ञानं संभरिता, सुख समृद्धि शान्तीनां प्रदायिनी, प्राचीनतमा च भाषा विद्यते ।

अध्यक्षासनात् श्री चतुर्वेदी महोदयः समबोधयत् यत् कवयः युगद्रष्टारः क्रान्तदर्शिनश्च समाजस्य साहित्यस्य च प्रवलाः प्रहरिणः भवन्ति । ये स्व कविताभिः निर्जीवान् इव अपि प्राणिनः सजीवान् कुर्वन्ति । संस्कृत साहित्यम् आदिकालात् (वैदिक कालात्) अद्य पर्यन्तं निरन्तरं, प्रवहमानं (अजस्रम्) विद्यते । विश्व भाषासु केवलं संस्कृत भाषायां गणित-विज्ञानादयः अपि विषयाः पद्य-निबद्धाः सन्ति ।

अत्रावसरे श्री राम लाल वर्मा (पूर्व पार्षदः) विधायकः श्री बोध राजः, आचार्य राम नाथः "सुमन" डॉ. मण्डन मिश्रः (पूर्व कुलपति) डॉ. श्रीधर वशिष्ठः (कुलपति) डॉ. कमला कान्त मिश्रः (निदेशक-रा. सं. सं.) प्रभृतयः विद्वांसः संस्कृत काव्य-महत्त्वं प्रतिपादयन्तः अकादमी कार्यक्रमान् श्लाघितवन्तः, कविसम्मेलने विंशति-अधिकाः संस्कृत कवयः राष्ट्र प्रेम भारतीय चरित्र प्रधानाभिः स्व मधुराभिः ओजस्विनीभिः च कविताभिः समुपस्थितान् प्रमुदितान् मुग्धान् च कृतवन्तः ।

मञ्च सञ्चालनं अकादमी सचिवः कवि रत्नम् श्री श्रीकृष्ण सेमवालः कृतवान् ।

## ५. संस्कृत दिवस समारोहः

२०-८-९४—महाराष्ट्र शासनम् "मुम्बई" स्थिते सिडनहम कालेज - डॉ. अम्बेदकर सभागृहे शनिवासरे पूर्णिमायां "संस्कृत दिवस समारोहं" समायोजत् । महाराष्ट्र शिक्षण राज्य मन्त्री नामदार श्री सदाशिवराव मंडलिक महोदयः समारोहस्य अध्यक्ष पदम् अलंचकार । प्रमुखातिथित्वेन श्री प्रभाकर धारकर (शिक्षण मन्त्री) सन्माननीयातिथित्वेन श्री सलीम झकेरिया (औकाफं) विशेषातिथिपदेन प्रा. अनन्त नाम जोशी (पूर्व शिक्षण मन्त्री) शिक्षण सचिवः श्री नवजीवन लखन पालः संस्कृत साहित्य वैशिष्ट्यं व्याख्यातवन्तः ।

अत्र समारोहे संस्कृत विषये गुणाधिक्यं प्राप्तकर्तारः स्नातक/स्नातकोत्तर विद्यार्थिनः विशिष्टाः विद्वांसः—डॉ. व्ही. वी. इनामदारः, पं. मोरेश्वर शास्त्री, डॉ. सौ. कला, श्री जी. व्ही. अय्यर महोदयाः-सम्मानिताः सत्कृताः अक्रियन्त ॥

—श्री श्री. धुं. कवीश्वरः
(संघटकः)

## ६. विज्ञप्तिः

भारत की राजधानी में प्रथम विशालतम ऐतिहासिक "संस्कृत महासम्मेलन" २२ और २३ अक्तूबर १९९४ को होगा । जिसमें देश के कोने-कोने से विद्वानों का समागम होगा । संस्कृत सेवा, संस्कृत रक्षा तथा संस्कृत प्रतिष्ठा के लिए सभी संस्कृत प्रेमियों को सम्मेलन में उपस्थित होने की प्रार्थना हैं । कृपया आज ही पूर्ण ब्योरे सहित स्वीकृति भेजें ।

प्रमुख कार्यक्रम—संस्कृत रक्षा सम्मेलन, विश्व शान्ति महायज्ञ, संगीत सम्मेलन, संस्कृत नाटक, संस्कृत कवि सम्मेलन ।

नोट :- ☐ सम्मेलनार्थ पधारे महानुभावों के लिए दिल्ली में रहने व खाने की निःशुल्क व्यवस्था होगी । ☐ अपने नगर से आगन्तुकों की संख्या लिखें । ☐ यदि आपकी कोई संस्था है, तो उसका उल्लेख करें । ☐ इच्छुक सज्जन रु. १०००/- भेज कर स्वागत समिति के सदस्य बनें ।

—विमलदेव भारद्वाज
अध्यक्ष—अखिल भारत संस्कृत महासम्मेलन
संस्कृत भवन, १२५, रामविहार,
दिल्ली-११००९२
दूरभाष: २२२२४३०

**७. संस्कृत प्रशिक्षण एवं शोध संस्थान, बिहार**

दिनांक २०-५-९४ से ३०-५-९४ तक सरस्वती शिशु मन्दिर परिसर, कदमकुआं, पटना-३ में "प्रान्तीय संस्कृत आचार्य प्रशिक्षण वर्ग" सफलता-पूर्वक सम्पन्न हुआ।

यह वर्ग श्री हिमांशु कुमार वर्मा (प्रदेश मन्त्री, शिशु शिक्षा प्रवन्ध समिति, बिहार, पटना), श्री रमेन्द्र राय (संभाग निरीक्षक), डॉ. सुरेन्द्र कुमार ब्रह्मचारी (पूर्व कुलपति), कामेश्वर सिंह (दरभंगा संस्कृत विश्वविद्यालय, दरभंगा), डॉ. मिथिलेश कुमारी मिश्रा (राष्ट्रभाषा परिषद, पटना), डॉ. श्री प्रकाश पाण्डेय (संस्कृत विभागाध्यक्ष, मुजफ्फरपुर, "राष्ट्रपति पुरस्कृत"), पण्डित गोविन्द झा (पटना) पं. गोविन्द झा (मौकामा), डॉ. सदानन्द दीक्षित (पुरी, उड़ीसा), श्री प्रकाशचन्द्र मिश्र (पुरी, उड़ीसा) कविराज आचार्य वामदेव त्रिपाठी (पटना) और श्री धीरेन्द्र झा (संगठन मन्त्री, संस्कृत विभाग, विद्या भारती पूर्वांचल क्षेत्र, पटना) के सान्निध्य व मार्ग-दर्शन में सम्पूर्ण गरिमा व शालीनता के साथ प्रशिक्षण कार्य सम्पन्न हुआ।

इस वर्ग में उत्तर विहार के ४, दक्षिण विहार के ८ आंचार्यों एवं २ आचार्याओं ने भाग लिया।

इस वर्ग में संस्कृत विषयक विभिन्न विधाओं व पक्षों के सैद्धान्तिक व व्यावहारिक पक्षों को विभिन्न प्रशिक्षकों द्वारा सम्यक्रूपेण रखा गया।

—धीरेन्द्र झा
संगठन मन्त्री

**८. "संस्कृत दिवसः" आयोजितः**

२१-८-९४ दिने—अखिल भारतीय संस्कृत प्रचार समिति, दरभङ्गा पक्षतः स्थानीय महाराज लक्ष्मीश्वर सिंह सार्वजनिक पुस्तकालये "संस्कृत दिवसः" समायोजितः। समारोहस्यारम्भः नरेन्द्र ठक्कुरस्य वेदमन्त्रोच्चारणेन अभवत्। समारोहेस्मिन् सुश्री विना कुमारी मंगलगानं प्रस्तुतवती। समारोहस्य अध्यक्षतां पुस्तकालयाध्यक्ष महोदयः कृतवान्। अत्र प्राक्तन् कुलपतिः डॉ० जयमन्त मिश्रः विशिष्ट-अतिथित्वेन व्यराजत्। डॉ० श्री विमल ठाकुरः (जिला विद्यालयस्य उपाचार्यः), डॉ० जयशंकर झा (समिति अध्यक्षः), आशुतोष कुमार (मन्नु), वरुण कुमारः, मोहन झा, सुश्री ममता झा, आशुतोष कुमार मिश्रः, सुश्री चन्दना कुमारी, पूनम कुमारी, कुमारी सुमन, रागिनी कुमारी, गोपाल झा, मनीष कुमारः, नीरज कुमारः, धीरेन्द्र मिश्रः, श्री जीवन झा, रामबालक पण्डितः, अरुण कुमारः एते महानुभावाः संस्कृत-महत्त्वं प्रतिपादितवन्तः छात्राश्चापि पुरस्कृताः अभवन्।

—श्री नरेन्द्र ठक्कुरः

**९. विज्ञप्तिः**

# दिल्ली संस्कृत अकादमी, दिल्ली सरकार

## "संस्कृत भवन" राजकीय माध्यमिक विद्यालय परिसर, वजीरपुर गाँव (फेज-१, जे. ब्लाक, अशोक विहार) दिल्ली-११००५२

दिल्ली संस्कृत अकादमी द्वारा प्रकाशित निम्नलिखित ग्रन्थ एवं पुस्तक तथा संगीतात्मक कैसेट विक्रय के लिए उपलब्ध हैं :—

| खण्ड 'क' | मूल्य | छूट | छूट के वाद मूल्य |
|---|---|---|---|
| १. महाबुद्धवत्थु (महाबुद्धवस्तु) (प्रथम भाग) | रु० २५०/- | ४५% | रु० १३७-५० |
| २. महाबुद्धवत्थु (महाबुद्धवस्तु) (द्वितीय भाग) | रु० ४००/- | ४५% | रु० २२०/- |
| ३. महाबुद्धवत्थु (महाबुद्धवस्तु) (तृतीय भाग) | रु० २६०/- | ४५% | रु० १४३/- |
| ४. महाबुद्धवत्थु (महाबुद्धवस्तु) (चतुर्थ भाग) | रु० ३५०/- | ४५% | रु० १९२-५० |
| ५. महाबुद्धवत्थु (महाबुद्धवस्तु) (पंचम भाग) | रु० १००/- | ४५% | रु० ५५/- |
| ६. संस्कृत मंजरी (त्रैमासिक पत्रिका) | शुल्क रु० ३२/- | — | रु० ३२/- प्रति वर्ष |
| ७. भीमशतकम् | रु० १८/- | — | रु० १८/- |
| ८. व्यावहारिक संस्कृतम् (प्रथम भाग) | रु० ५/- | — | रु० ५/- |
| ९. व्यावहारिक संस्कृतम् (प्रथम भाग १६ चार्ट) | रु० १६/- | — | रु० १६/- |
| १०. व्यावहारिक संस्कृतम् (प्रथम भाग संगीतमय कैसेट) | रु० १५/- | — | रु० १५/- |
| ११. वर्णात्मिक भगवती सुप्रभातम् (संगीतमय कैसेट) | रु० २५/- | — | रु० १५/- |
| १२. हनुमत्सुप्रभातम् (संगीतमय कैसेट) | रु० २५/- | — | रु० २५/- |
| १३. मेघदूत (संगीतात्मक कैसेट) (प्रथम भाग) | रु० २५/- | ५०% | रु० १२-५० |
| " " " (द्वितीय भाग) | रु० २५/- | ५०% | रु० १२-५० |
| " " " (तृतीय भाग) | रु० २५/- | ५०% | रु० १२-५० |
| १४. गुरु शंकराचार्य द्वारा रचित सौन्दर्य लहरी (प्रति भाग) प्रथम व द्वितीय भाग (संगीतात्मक कैसेट) | रु० २५/- | ५०% | रु० १२-५० |

इसके अतिरिक्त अकादमी के आर्थिक सहायता द्वारा प्रकाशित निम्नलिखित संस्कृत पुस्तकें भी विक्रय हेतु उपलब्ध हैं :—

खण्ड 'ख'

| | मूल्य | छूट | छूट के बाद | | मूल्य | छूट | छूट के बाद |
|---|---|---|---|---|---|---|---|
| १. पत्र काव्यम् | रु. ३००/- | ४५% | रु. १६५/- | २. गीति मंजरी | रु. ६०/- | ४५% | रु. ३३/- |
| ३. वैदिकी यज्ञ विद्या | रु. २००/- | ४५% | रु. ११०/- | ४. बालैकविशंति | रु. १२/- | ४५% | रु. ६-६० |
| ५. एकांकिनाट्यद्वयम् | रु. २०/- | ४५% | रु. ११/- | ६. व्यामोहः | रु. ४०/- | ४५% | रु. २२/- |
| ७. महर्षिमाल्यार्पणम् | रु. २५/- | ४५% | रु. १३-७५ | ८. सावित्री | रु. २५/- | ४५% | रु. १३-७५ |

पुस्तकें आदि किसी भी कार्य दिवस पर अकादमी के कार्यालय से प्रातः १० बजे से सायं ५ बजे के वीच नकद भुगतान कर अथवा दिल्ली में भुगतान योग्य, "सचिव दिल्ली संस्कृत अकादमी" के नाम बैंक ड्राफ्ट द्वारा क्रय की जा सकती हैं। चैक स्वीकार न होंगे। पुस्तकें आदि वी० पी० पी० द्वारा भी मंगायी जा सकती हैं परन्तु डाक व्यय क्रय करने वाले को ही वहन करना होगा।

श्रीकृष्ण सेमवाल
सचिव

शोध सं...

आर नं० 39380/78- बिना १८-५-९४ ने का लाइसेंस नं० डी०-एल० 12023/94, यू० (U) डी०एन० 35/94

सेवायाम्

श्रीयुत

वी.वी. रामा परिञ्जा
मन्त्री गीर्वाण भाषाभिवर्धिनी सभा
राजा स्ट्रीट संस्कृत कला शाला
मेले कोटे पिन (571431)
जिला माण्डया कर्णाटक

**संस्कृतामृतम्**

पञ्जीकरण सं० ऐस् ४००

प्रेरक:-नेपाल राजगुरुः योगी श्रीनरहरिनाथ: शास्त्री

१. संरक्षक:-ऋषि कल्प: पं० श्री विश्वनाथ प्रभाकर शास्त्री, संचालक:—श्री सरस्वती संस्कृत महाविद्यालय: खन्ना (पंजाब)

२. मान्य: स्वामी आनन्द बोध सरस्वती प्रधान-सार्वदेशिक आर्य प्रतिनिधि सभा दिल्ली।

सहायक सम्पादक मण्डलम्—

१. श्री प्रकाशचन्द्रः शास्त्री विद्यालंकार:

२. श्री सुधीर कुमार शर्मा, बी० काम्

प्रकाशन-कार्यालय—

१४१८, बाजार गुलियान, दिल्ली-११०००६

## संस्कृतं सेवामहे

मान्या: संस्कृत विद्वांस:

यतो हि संस्कृतज्ञा एव संस्कृतपत्रपत्रिकाणामाधार भूता इत्यस्मात्संस्कृतभाषामुखेन वैदिक संस्कृत-सेवा राष्ट्रगौरव-वृद्धिश्च मुख्योद्देश्यमस्यसंस्कृतामृतस्येति विदितार्थैः भवद्भि: ममता पूर्वकमादौ लेख-प्रेषकै:-भाव्यम् ततः पाठकैः भाव्यम्, ततो ग्राहकै: भाव्यम्। सर्वदा सर्वथा संरक्षकै: संवर्धकैश्च भवद्भि: 'संस्कृतामृतम्-इत्यस्य पत्रस्य प्रकाशनेऽस्मिन् राष्ट्रिये च कर्मणि प्रोत्साहकैः भाव्यम् इति।

इदं हि पुण्यदायकं सारस्वतं यज्ञं अनवरतं प्रचरेत् इत्यर्थे आवश्यकं यद् यज्ञेऽस्मिन् सर्वेऽपि संस्कृतामृत-पाठका: निम्नलिखित रूपेण आहुतिं प्रदद्यु: यथा—

१—स्वेच्छया आर्थिक सहायता प्रदान रूपेण।
२—वार्षिक-शुल्क ३०) रूप्यकप्रेषण रूपेण।
३—प्रकाशन-योग्यानां लेखादिकानां प्रेषणरूपेण
४—अनुरूपाणां विज्ञापनानां प्रकाशन रूपेण।
५—परिचितानां संस्कृतानुरागिपाठकानां गृह-संकेत प्रेषण रूपेण

## संस्कृतामृतस्योद्देश्यानि

(क) प्राचीनार्वाचीन-संस्कृतार्षविद्यानां सच्चरितानाञ्च विश्वव्यापी प्रचार:।

(ख) दुर्व्यसन- परित्याग- प्रेरणा-पुर: सरं विश्वकल्याणकारिणीं भारतीय संस्कृतिं प्रति जनताऽभिरुचिजागरणम्।

(ग) संस्कृत-संस्कृतिसेवायां यापित-जीवनानां विदुषामभिनन्दनम्।

(घ) रुचि-कराणामभिनवानां ग्रन्थानां प्रकाशनम्।

(ङ) सुरभारत्या: संस्कृतभाषाया: सरलीकरणम्।

**प्रकाशन नियमा :—**

(क) संस्कृतामृतं प्रतिमासं पंचदशे दिने प्रकाश्यते।

(ख) उद्देश्यानुकूला: सुवाच्या: लेखा: प्रकाश्यन्ते।

(ग) लेखानां परिवर्तने संपादकमण्डलम् साधिकारम्।

(घ) उद्देश्यानुरूपाणि एव विज्ञापनानि प्रकाश्यन्ते।

(ङ) पुस्तकादीनां समालोचनं प्रतिद्वयं प्रेष्यम्।

(च) पत्रं न लब्धं चेद् द्वादशादनाभ्यन्तरे सूचना देया, प्रेष्यते।

(छ) वार्षिक शुल्कं त्रिंशत् ( ) रूप्यकाणि।

—सम्पादकमण्डलम्

मुद्रक—ब्रह्मा प्रिंटिंग प्रेस, 1232, चौक शाह मुबारिक, बाजार सीताराम, दिल्ली-6 द्वारा
**प्रभाकर रामरत्न शास्त्री ने प्रकाशन कार्यालय से प्रकाशित किया।**